३. आनन्दश्रेष्ठिनमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

पुत्रो मेऽस्ति, धनं मेऽस्ति, इति बालो विहन्यते।
आत्मैव ह्यात्मनो नास्ति, कुतः पुत्राः कुतो धनम्!॥ ६२॥ •

४. ग्रन्थिभेदकंचौरानभिलक्ष्य : : श्रावस्तीनगरे जेतवने

यो बालो मन्यते बाल्यं, पण्डितो वापि तेन सः।
बालश्च पण्डितम्मन्यः, स वै बाल इतीर्यते॥ ६३॥ •

५. आयुष्मन्तमुदायिस्थविरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

यावज्जीवं नु बालश्चेत्, पर्युपास्ते हि पण्डितम्।
न स धर्मं विजानाति, दर्वी सूपरसं यथा॥ ६४॥ •

६. त्रिंशत्पावेयकभिक्षुजनानुद्दिश्य : : जेतवने श्रावस्तीनगरे

मुहूर्तमपि चेद्विज्ञः, पर्युपास्ते हि पण्डितम्।
क्षिप्रं धर्मं विजानाति, जिह्वा सूपरसं यथा॥ ६५॥ •

७. सुप्रबुद्धं कुष्ठरोगिणमुद्दिश्य : : राजगृहे वेणुवने

चरन्ति बालाः कुधियोऽमित्रेणेवात्मना स्वयम्।
कुर्वन्तः पापकं कर्म तस्यास्ति कटुकं फलम्॥ ६६॥ •

८. एकं कृषकमारभ्य : : श्रावस्तीनगरे जेतवने

न तत् कर्म कृतं साधु, यत् कृत्वा ह्यनुतप्यते।
रुदन्नश्रुमुखो यस्य, विपाकं प्रतिसेवते॥ ६७॥ •

९. सुमनसं मालाकारमुद्दिश्य : : राजगृहे वेणुवने

तच्च कर्म कृतं साधु, यत् कृत्वा नानुतप्यते।
यस्य प्रतीतं सुमना विपाकं प्रतिसेवते॥ ६८॥ •

१०. उत्पलवर्णां बुद्धश्राविकामुद्दिश्य : : श्रावस्तीनगरे जेतवने

मध्विव मन्यते बालो यावत् पापं न पच्यते।
यदा च पच्यते पापं, दुःखं बालो निगच्छति॥ ६९॥ •

११. जम्बुकाजीवकमभिलक्ष्य : : राजगृहे वेणुवने

मासे मासे कुशाग्रेण, बालो भुंक्ते हि भोजनम्।
न स सङ्ख्यातधर्माणां, कलामर्हति षोडशीम्॥ ७०॥ •

१२. कञ्चित् अहिप्रेतमुद्दिश्य : : राजगृहे वेणुवने

नहि पापं कृतं कर्म, सद्यो मुञ्चति दुग्धवत्।
दहत् तद् बालमन्वेति, भस्मावृतवह्निवत्॥ ७१॥ •

१३. षष्टिकूटप्रेतमभिलक्ष्य : : राजगृहे वेणुवने

यावदेव ह्यनर्थाय, ज्ञप्तं बालस्य जायते।
हन्ति बालस्य शुक्लांशं, तन्मूर्धानं विपातयन्॥ ७२॥ •

१४. चित्तगृहपतिमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

असतीं भावनामिच्छेत्, पुरस्कारं च भिक्षुषु।
आवासेषु च ऐश्वर्यं, पूजां परकुलेषु च॥ ७३॥
'कृतं ममैव मन्येतां गृहिप्रव्रजितावुभौ।
ममैवातिवशौ स्यातां कृत्याकृत्येषु केषुचित्'॥ ७४॥
इति बालस्य सङ्कल्प इच्छा, मानश्च वर्धते॥ •

१५. वनवासितिष्यश्रामणेरमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

'अन्योपनिषद्धि लाभस्य, अन्या निर्वाणगामिनी'।
एवमेतदभिज्ञाय, भिक्षुर्बुद्धस्य श्रावकः।
सत्कारं नाभिनन्देद् वै, विवेकमनुबृंहयेत्॥ ७५॥ •

बालवर्गः पञ्चमः समाप्तः॥

## ६. पण्डितवर्गः षष्ठः

१. आयुष्मन्तं राधस्थविरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

निधीनां च प्रवक्तारं सम्पश्येद्वर्ज्यदर्शिनम्।
निगृह्यवादिसुधियं तादृशं पण्डितं भजेत्॥
तादृशं भजमानस्य श्रेय एव न पापकम्॥ ७६॥ •

२. अश्वजित्–पुनर्वसुभिक्षू आरभ्य : : श्रावस्तीनगरे जेतवने

उपदिशेदनुशिष्याद्वै, असभ्याच्च निवारयेत्।
सतां हि स प्रियो भूयादप्रियश्चासतां ननु॥ ७७॥ •

३. आयुष्मन्तं छन्नस्थविरमारभ्य : : श्रावस्तीनगरे जेतवने

भजेन्न पापमित्राणि, न भजेत् पुरुषाधमान्।
भजेत् कल्याणमित्राणि, भजेत पुरुषोत्तमान्॥ ७८॥ •

४. महाकप्पिनस्थविरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

धर्मप्रीतिः सुखं शेते, विप्रसन्नेन चेतसा।
आर्यप्रवेदिते धर्मे, पण्डितो रमते सदा॥ ७९॥ •

५. पण्डितश्रामणेरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

उदकं हि नयन्ति नेतृकाः, इषुकारा नमयन्ति तेजनम्।
नमयन्ति हि दारु तक्षकाः, आत्मानं दमयन्ति पण्डिताः॥ ८०॥ •

६. लकुण्टकभद्रियस्थविरमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

यथा ह्येकघनः शैलो, वातेन न समीर्यते।
एवं निन्दाप्रशंसासु, समीर्यन्ते न पण्डिताः॥ ८१॥ •

७. काणमातरमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

ह्रदो यथा हि गम्भीरो, विप्रसन्नो ह्यनाविलः।
मत्तः श्रुत्वा तथा धर्मान्, विप्रसीदन्ति पण्डिताः॥ ८२॥ •

८. पञ्चशतभिक्षूनुद्दिश्य : : श्रावस्तीनगरे जेतवने

सर्वत्र वै सत्पुरुषास्त्यजन्ति, न कामकामा लपयन्ति सन्तः।
दुःखेन स्पृष्टा अथवा सुखेन, नोच्चावचं पण्डिता दर्शयन्ति॥ ८३॥ •

९. धार्मिकस्थविरमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

न स्वस्य हेतोर्न परस्य हेतोर्न पुत्रमिच्छेन्न धनं न राष्ट्रम्।
नेच्छेदधर्मेण समृद्धिमात्मनः, स शीलवान् पण्डितो धार्मिकः स्यात्॥ ८४॥•

१०. धर्मश्रवणार्थं भिक्षूणामुत्साहसंवर्धनाय : : श्रावस्तीनगरे जेतवने

अल्पकास्ते मनुष्येषु, ये जनाः पारगामिनः।
अथेयमितरा प्रजा, तीरमेवानुधावति॥ ८५॥
ये खलु सम्यगाख्याते, धर्मे धर्मानुदर्शिनः।
ते जनाः पारमेष्यन्ति, मृत्युधेयं सुदुस्तरम्॥ ८६॥ •

११. पञ्चशतमागन्तुकान् भिक्षूनुद्दिश्य : : श्रावस्तीनगरे जेतवने

कृष्णं धर्मं विप्रहाय, सुधीः शुक्लं नु भावयेत्।
ओकादनोकमागत्य, विवेके यत्र दूरमम्॥ ८७॥
तत्राभिरतिमिच्छेद्वै, हित्वा कामानकिञ्चनः।
पर्यवदापयेत् स्वं वै, चित्तक्लेशैः स पण्डितः॥ ८८॥

सम्बोध्यङ्गेषु येषां च, सम्यक् चित्तं सुभावितम्।
आदान-प्रतिनिःसर्गे, अनुपादाय ये रताः।
क्षीणाश्रवा द्युतियुतास्ते लोके परिनिर्वृताः ॥ ८९ ॥ •

पण्डितवर्गः षष्ठः समाप्तः ॥



## ७. अर्हद्वर्गः सप्तमः

१. जीवकपृष्टप्रश्नमुद्दिश्य : : राजगृहे जीवकाम्रवने

गताध्वनो विशोकस्य, विप्रमुक्तस्य सर्वतः।
सर्वग्रन्थविहीनस्य, परिदाहो न विद्यते ॥ ९० ॥ •

२. महाकाश्यपस्थविरमुद्दिश्य : : राजगृहे वेणुवने

यतन्ते स्मृतिमाधाय, रमन्ते न गृहेषु ते।
हंसवत् पल्वलं हित्वा ओकमोकं तरन्ति ते ॥ ९१ ॥ •

३. विल्वास्थिशीर्षस्थविरमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

येषां सन्निचयो नास्ति, ये परिज्ञातभोजनाः।
शून्यतो ह्यनिमित्तश्च, विमोक्षो यस्य गोचरः।
नभसीव शकुन्तानां गतिस्तस्य दुरन्वया ॥ ९२ ॥ •

४. अनुरुद्धस्थविरमभिलक्ष्य : : राजगृहे वेणुवने

यस्याश्रवाः परिक्षीणाः, आहारे खल्वनिःसृतः।
अनिमित्तः शून्यतश्च, विमोक्षो यस्य गोचरः।
शकुन्तानामिवाकाशे, पदं तस्य दुरन्वयम् ॥ ९३ ॥ •

५. महाकात्यायनस्थविरमभिलक्ष्य : : श्रावस्तीनगरे पूर्वारामे

यस्येन्द्रियाणि शमथं गतानि, अश्वा यथा सारथिना सुदन्ताः।
प्रहीणमानस्य अनाश्रवस्य, देवा नु तस्मै स्पृहयन्ति तादृशे ॥ ९४ ॥ •

६. सारिपुत्रस्थविरमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

पृथ्वीसमो न विरुध्यते, इन्द्रकीलोपमः सुव्रतस्तादृक्।
ह्रदवदपेतकर्दमः, संसाराणि न सन्ति तादृशः ॥ ९५ ॥ •

७. कौशाम्बिवासितिष्यस्थविरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

शान्तं कर्म शमा वाचा, शान्तं भवति तन्मनः।
सम्यगाज्ञाविमुक्तस्य, ह्युपशान्तस्य तादृशः॥ ९६॥ •

८. सारिपुत्रस्थविरमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

अश्रद्धश्चाकृतज्ञश्च, सन्धिच्छेदश्च यो नरः।
हतावकाशो वान्ताशः, स वै उत्तमपूरुषः॥ ९७॥ •

९. खदिरवनीयरेवतस्थविरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

ग्रामे वा यदि वारण्ये, निम्ने वा यदि वा स्थले।
अर्हन्तो यत्र विहरन्ति, सा भूमी रमणीयका॥ ९८॥ •

१०. काञ्चिदन्यतरां स्त्रियमभिलक्ष्य : : श्रावस्तीनगरे जेतवनारामे

रमणीयान्यरण्यानि, न यत्र रमते जनः।
वीतरागा हि रंस्यन्ते, न ते कामगवेषिणः॥ ९९॥ •

अर्हद्वर्गः सप्तमः समाप्तः॥

## ८. सहस्रवर्गोऽष्टमः

१. ताम्रदंष्ट्रिकचौरघातकमुद्दिश्य : : राजगृहे वेणुवने

सहस्रमपि चेद्वाचो, ह्यनर्थपदसंहिताः।
एकमर्थपदं श्रेयः, श्रुत्वा यदुपशाम्यति॥ १००॥ •

२. बाह्यदारुचीवरीयस्थविरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

सहस्रमपि चेद् गाथाः, अनर्थपदसंहिताः।
एकं गाथापदं श्रेयः, श्रुत्वा यदुपशाम्यति॥ १०१॥ •

३. कुण्डलकेशीं श्राविकामुद्दिश्य : : श्रावस्तीनगरे जेतवने

गाथाः शतं यो भाषेत, ह्यनर्थपदसंहिताः।
एकं धर्मपदं श्रेयः, श्रुत्वा यदुपशाम्यति॥ १०२॥
यः सहस्रं सहस्रेण, संग्रामे मानुषान् जयेत्।
जयेदात्मानमेकं च, स संग्राममजिदुत्तमः॥ १०३॥ •

४. अनर्थप्रश्नं कञ्चिद् ब्राह्मणमुद्दिश्य : : श्रावस्तीनगरे जेतवने

आत्मा ह वै जितः श्रेयान्, या चेयमितरा प्रजा।
पुरुषस्यात्मदान्तस्य, नित्यं संयतचारिणः॥ १०४॥

नैव देवो न गन्धर्वो न मारो ब्रह्मणा सह।
जितमपजितं कुर्याज्जन्तोस्तु खलु तादृशः॥ १०५॥ •

५. सारिपुत्रमातुलब्राह्मणमुद्दिश्य : : राजगृहे वेणुवने

मासे मासे सहस्त्रेण, यो यजेत शतं समाः।
एकं च भावितात्मानं, मुहूर्तमपि पूजयेत्।
श्रेयसी पूजना सैव, यन्न वर्षशतं हुतम्॥ १०६॥ •

६. सारिपुत्रस्थविरभागिनेयमुद्दिश्य : : राजगृहे वेणुवने

यश्च वर्षशतं जन्तुरग्निं परिचरेद् वने।
एकं च भावितात्मानं, मुहूर्तमपि पूजयेत्।
पूजना श्रेयसी सैव, न यद् वर्षशतं हुतम्॥ १०६॥ •

७. सहायकब्राह्मणमुद्दिश्य : : राजगृहे वेणुवने

यत् किञ्चिदिष्टं च हुतं च लोके, संवत्सरं यजते पुण्यकांक्षः।
तत् सर्वमपि न चतुर्थांशमेति, श्रेयस्करी यार्जुगतेषु वन्दना॥ १०६॥•

८. दीर्घायुष्कुमारमभिलक्ष्य : : दीर्घलङ्घिकनगरे अरण्यकुट्याम्

अभिवादनशीलस्य, नित्यं वृद्धोपजिविनः।
चत्त्वारो धर्मा वर्धन्ते, आयुर्वर्णः सुखं बलम्॥ १०९॥ •

९. साङ्कृत्यश्रामणेरमुद्दिश्य : : श्रावस्तीनगरे जेतवने

यश्च वर्षशतं जीवेद्, दुश्शीलश्चासमाहितः।
एकाहो जीवितं श्रेयः, शीलिनो ध्यायिनस्तथा॥ ११०॥ •

१०. स्थाणुकौण्डिन्यस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

यश्च वर्षशतं जीवेद्, दुष्प्रज्ञश्चासमाहितः।
एकाहो जीवितं श्रेयः, प्रज्ञायुक्तस्य ध्यायिनः॥ १११॥ •

११. सर्पदासस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

यश्च वर्षशतं जीवेत् कुसीदो हीनवीर्यवान्।
एकाहो जीवितं श्रेयो वीर्यमारभतो दृढम्॥ ११२॥ •

१२. पटाचारश्राविकामारभ्य : : श्रावस्त्यां जेतवने

यश्च वर्षशतं जीवेद्, अपश्यँश्चोदयव्ययम्।
एकाहो जीवितं श्रेयः पश्यतो ह्युदयव्ययम्॥ ११३॥ •

१३. कृशां गौतमीमभिलक्ष्य : : श्रावस्त्यां जेतवने

यश्च वर्षशतं जीवेद्, अपश्यन्नमृतं पदम्।
एकाहो जीवितं श्रेयः, पश्यतो ह्यमृतं पदम्॥ ११४॥ •

१४. बहुपुत्रिकां श्राविकामारभ्य : : श्रावस्त्यां जेतवने

यश्च वर्षशतं जीवेद्, अपश्यन् धर्ममुत्तमम्।
एकाहो जीवितं श्रेयः पश्यतो धर्ममुत्तमम्॥ ११५॥ •

सहस्त्रवर्गोऽष्टमः सम्पन्नः॥

## ९. पापवर्गो नवमः

१. क्षुद्रैकशाटकं ब्राह्मणमभिलक्ष्य : : श्रावस्त्यां जेतवने

त्वरां कुर्याद्धि कल्याणे, पापाच्चित्तं निवारयेत्।
मन्दं हि कुर्वतः पुण्यं पापे हि रमते मनः॥ ११६॥ •

२. श्रेयस्कस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

पापं चेत् पुरुषः कुर्यान्न तत् कुर्यात् पुनः पुनः।
न तस्मिन् स्वैरितां कुर्याद् दुःखं पापस्य तूच्छ्रयः॥ ११६॥ •

३. लाजदेवधीतरमारभ्य : : श्रावस्त्यां जेतवने

पुण्यं चेत् पुरुषः कुर्यादेतत् कुर्यात् पुनः पुनः।
तस्मिंश्च छन्दं कुर्यात् स सुखं पुण्यस्य चोच्छ्रयः॥ ११८॥ •

४. अनाथपिण्डदश्रेष्ठिनमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

भद्रं पश्यति पापोऽपि, यावत् पापं न पच्यते।
यदा च पच्यते पापम् (अथ) पापः पापानि पश्यति॥ ११९॥ •
पापं पश्यति भद्रोऽपि, यावद् भद्रं न पच्यते।
यदा च पच्यते भद्रम्, (अथ) भद्रो भद्राणि पश्यति॥ १२०॥ •

५. असंयतपरिष्कारभिक्षुमभिलक्ष्य : : श्रावस्तीनगरे जेतवने

मावमन्येत[१] पापं वै, न मामेतद्धि पक्ष्यति।
उदबिन्दुनिपातेन, ह्युदकुम्भोऽपि पूर्यते॥
बालः पूरयते पापमाचिन्वन् स्तोकमप्यथ॥ १२१॥ •

---

१. माल्पं मन्येत—पाठा०। एवमग्रिमश्लोकेऽपि।

६. विडालपादकश्रेष्ठिनमुद्दिश्य : : श्रावस्त्यां जेतवने

मावमन्येत पुण्यं वै, न मामेतद्धि पक्ष्यति।
उदबिन्दुनिपातेन, ह्युदकुम्भोऽपि पूर्यते।
बालः पूरयते पुण्यमाचिन्वन् स्तोकमप्यथ॥ १२२॥ •

७. महाधनवणिजमारभ्य : : श्रावस्त्यां जेतवने

वणिग्वत् सभयं मार्गमल्पसार्थो महद्धनः।
विषवज्जीवितं वाञ्छन् पापानि परिवर्जयेत्॥ १२३॥ •

८. कुक्कुटमित्रनिषादमारभ्य : : राजगृहे वेणुवने

पाणौ यदि व्रणं नास्य, स हरेत् पाणिना विषम्।
नाव्रणं विषमन्वेति, नास्ति पापमकुर्वतः॥ १२४॥ •

९. कोकं सुनखलुब्धकमुद्दिश्य : : श्रावस्त्यां जेतवने

यो ह्यप्रदुष्टाय नराय दुष्यति, शुद्धाय सत्त्वाय निरञ्जनाय।
प्रत्येति पापं नु तदेव बालं, यथा हि सूक्ष्मः प्रतिवातरेणुः॥ १२५॥•

१०. मणिकारकुलोपगतिष्यस्थविरमालक्ष्य : : श्रावस्त्यां जेतवने

उत्पद्यन्ते गर्भमेके, निरयं पापिनस्तथा।
स्वर्गं सुगतयो यन्ति, परिनिर्वान्त्यनाश्रवाः॥ १२६॥ •

११. जनत्रयमुद्दिश्य : : श्रावस्त्यां जेतवने

न ह्यन्तरिक्षे न समुद्रमध्ये, न पर्वतानां विवरं प्रविश्य।
न विद्यते स जगति प्रदेशो, यतो हि मुच्येत नु पापकर्मणः॥ १२७॥•

१२. सुप्रबुद्धशाक्यमभिलक्ष्य : : न्यग्रोधारामे (कपिलवस्तुनगरे)

न ह्यन्तरिक्षे न समुद्रमध्ये, न पर्वतानां विवरं प्रविश्य।
न विद्यते स जगति प्रदेशो, यतो हि मुच्येत नु मृत्युपाशात्॥ १२८॥•

नवमः पापवर्गः सम्पन्नः॥



## १०. दशमो दण्डवर्गः

१. षड्वर्गीयान् भिक्षूनारभ्य : : श्रावस्त्यां जेतवने

सर्वे त्रस्यन्ति दण्डाद्वै, सर्वे बिभ्यति मृत्युतः।
आत्मानमुपमां कृत्वा, न हन्यान्न च घातयेत्॥ १२९॥ •

२. षड्वर्गीयान् भिक्षूनेवारभ्य : : श्रावस्त्यां जेतवने

सर्वे त्रस्यन्ति दण्डाद्वै, सर्वेषां जीवितं प्रियम्।
आत्मानमुपमां कृत्वा, न हन्यान्न च घातयेत्॥ १३०॥ •

३. सम्बहुलकुमारानुद्दिश्य : : श्रावस्त्यां जेतवने

सुखकामानि भूतानि, दण्डेन हि हिनस्ति यः।
आत्मनः सुखमिच्छन् स, न प्रेत्य लभते सुखम्॥ १३१॥
सुखकामानि भूतानि, दण्डेन न हिनस्ति यः।
आत्मनः सुखमिच्छन् स, प्रेत्य वै लभते सुखम्॥ १३२॥ •

४. कोण्डधानस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

मा वोचः परुषं किञ्चित्, त्वां वक्ष्यन्ति तथैव ते।
दुःखा हि संरम्भकथाः, त्वां स्पृशेयुः सदण्डकाः॥ १३३॥
नेर्यसे चेत्त्वमात्मानं, कांस्यमुपहतं यथा।
एष प्राप्तोऽसि निर्वाणं, संरम्भस्ते न विद्यते॥ १३४॥ •

५. 'उपोसथ'व्रतधारिकाः स्त्रीरुद्दिश्य : : श्रावस्त्यां जेतवने

यथा दण्डेन गोपालो गाः प्राजयति गोचरम्।
एवं जरा च मृत्युश्चायुः प्राजयति देहिनाम्॥ १३५॥ •

६. अजगरप्रेतमभिलक्ष्य : : राजगृहे वेणुवने

अथ पापानि कर्माणि, कुर्वन् बालो न बुध्यते।
स्वकर्मभिश्च दुर्मेधास्तप्यते ह्यग्निदग्धवत्॥ १३६॥ •

७. महामौद्गल्यायनस्थविरमुद्दिश्य : : राजगृहे वेणुवने

दण्डेन यो ह्यदण्ड्येषु, अप्रदुष्टेषु दुष्यति।
दशस्वन्यतमं स्थानं, क्षिप्रमेव निगच्छति॥ १३७॥
वेदनां परुषां हानिं, शरीरस्य च भेदनम्।
आबाधं वा हि गुरुकं, चित्तक्षेपं च प्राप्नुयात्॥ १३८॥

उपसर्गं राजतो वा, अभ्याख्यानं हि दारुणम्।
परिक्षयं वा ज्ञातीनां, भोगानां वा प्रभञ्जनम्॥ १३९॥
अथ वास्य ह्यगाराणि, अग्निर्दहति पावकः।
कायस्य भेदाद् दुष्प्रज्ञो, निरयं ह्युपपद्यते॥ १४०॥ •

८. बहुभण्डकं भिक्षुमुद्दिश्य : : श्रावस्त्यां जेतवने

न नग्नचर्या न जटा न पङ्कः, तथोपवासः खलु भूमिशय्या।
रजोजलं नोत्कटिकप्रधानं विशोधयेन्मर्त्यमतीर्णकांक्षम्॥ १४१॥ •

९. सन्ततिमहामात्यमुद्दिश्य : : श्रावस्त्यां जेतवने

अलंकृतश्चापि शमं चरेद्यः, शान्तो दान्तो नियतो ब्रह्मचारी।
सर्वेषु भूतेषु निधाय दण्डं, स ब्राह्मणः स श्रमणः स भिक्षुः॥ १४२॥ •

१०. 'पिलोतिक'स्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

ह्रीनिषेधो न पुरुषः, कश्चिल्लोके हि विद्यते!
यो निन्दां न प्रबोधयति, अश्वो भद्रः कशामिव॥ १४३॥
भद्रो यथाश्वः कशया निविष्टः, आतापसंवेगयुता भवेयुः।
शीलेन वीर्येण च श्रद्धया वा, समाधिना धर्मविनिश्चयेन।
सम्पन्नविद्याचरणः प्रतिस्मृतो जहास्यथो दुःखमिदं ह्यनल्पकम्॥ १४४॥ •

११. सुखश्रामणेरमभिलक्ष्य : : श्रावस्त्यां जेतवने

उदकं हि नयन्ति नेतृकाः, इषुकारा नमयन्ति तेजनम्।
नमयन्ति हि दारु तक्षकाः, आत्मानं दमयन्ति पण्डिताः॥ १४५॥ •

दण्डवर्गो दशमः सम्पन्नः॥



## ११. जरावर्ग एकादशः

१. विशाखायाः सहायिका अभिलक्ष्य : : श्रावस्त्यां जेतवने

**को नु हासः क आनन्दो नित्यं प्रज्वलिते सति!**
**अन्धकारावृता यूयं गवेषयथ दीपकम्॥ १४६॥ •**

२. सिरिमानामिकां गणिकामुद्दिश्य : : राजगृहे वेणुवने

**पश्य चित्रकृतं बिम्बमरुष्कायं समुच्छ्रितम्।**
**आतुरं बहुसङ्कल्पं यस्य नास्ति ध्रुवा स्थितिः॥ १४७॥ •**

३. उत्तरां स्थविरामभिलक्ष्य : : श्रावस्त्यां जेतवने

**परिजीर्णमिदं रूपं रोगनीडं प्रभङ्गुरम्।**
**भिद्यते पूतिसन्देहो मरणान्तं हि जीवितम्॥ १४८॥ •**

४. सम्बहुलाधिमानिकभिक्षूनालक्ष्य : : श्रावस्त्यां जेतवने

**इमानि यान्यपास्तानि, अलाबूनीव शारदे।**
**कपोतवर्णान्यस्थीनि, तानि दृष्ट्वा नु का रतिः!॥ १४९॥ •**

५. रूपनन्दां स्थविरामुद्दिश्य : : श्रावस्त्यां जेतवने

**अस्थ्नामस्ति पुरं ह्येतत्, मांसलोहितलेपनम्।**
**जरा यत्र च मृत्युश्च, मानो म्रक्षः प्रतिष्ठितः॥ १५०॥ •**

६. मल्लिकादेवीमुद्दिश्य : : श्रावस्त्यां जेतवने

**जीर्यन्ति वै राजरथाः सुचित्राः, एतच्छरीरं जरया ह्युपेतम्।**
**सतां तु धर्मो न जरामुपैति, सभ्या हवै सत्पुरुषा भवन्ति॥ १५१॥ •**

७. लाडुदायिस्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

**अल्पश्रुतोऽयं पुरुषो जीर्यते बलिवर्दवत्।**
**वर्धन्ते तस्य मांसानि, प्रज्ञा त्वस्य न वर्धते॥ १५२॥ •**

८. आनन्दस्थविरमुद्दिश्य : : बोधिवृक्षमूले उदानम्

अनेकजातिसंसारमधाविषमितस्ततः ।
गृहकारं गवेषयन्, दुःखा जातिः पुनः पुनः॥ १५३॥
गृहकारक! दृष्टोऽसि, ( पुनः ) गेहं नैव करिष्यसि!
सर्वास्ते पार्शुका भग्नाः, गृहकूटं विसंस्कृतम्।
विसंस्कारगतं चित्तं, तृष्णानां क्षयमध्यगात्॥ १५४॥ •

९. महाधनं श्रेष्ठिपुत्रमभिलक्ष्य : : ऋषिपतने मृगदावे

अचरित्वा ब्रह्मचर्यम्, अलब्ध्वा यौवने धनम्।
जीर्णक्रौञ्चाः क्षीणमत्स्ये यथा ध्यायन्ति पल्वले॥ १५५॥
अचरित्वा ब्रह्मचर्यम्, अलब्ध्वा यौवने धनम्।
पुराणानिव स्तुन्वन्तः शेरते भग्नचापवत्॥ १५६॥ •

जरावर्ग एकादशः सम्पन्नः॥



## १२. आत्मवर्गो द्वादशः

१. बोधिराजकुमारमुद्दिश्य : : भेषकड़ावने (सुंसुमारगिरौ)

जानीयात् प्रियमात्मानम्, इमं रक्षेत् सुरक्षितम्।
त्रिषु चान्यतमं यामं, पण्डितः प्रतिजाग्रियात्॥ १५७॥ •

२. उपनन्दशाक्यपुत्रमुद्दिश्य : : श्रावस्त्यां जेतवने

आत्मानमेव प्रथमं, प्रतिरूपं निवेशयेत्।
अथायमन्यमनुशिष्यात्, क्लिश्येदेवं न पण्डितः॥ १५८॥ •

३. प्राधानिकतिष्यस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

आत्मानं चेत्तथा कुर्यात्, यथान्य उपदिश्यते।
परं सुदान्तो दमयेत्, आत्मा हि किल दुर्दमः॥ १५९॥ •

४. कुमारकाश्यपमातरमुद्दिश्य : : श्रावस्त्यां जेतवने

आत्मा वै आत्मनो नाथः, को नाथो हि परो भवेत्।
आत्मना हि सुदान्तेन, नाथं प्राप्नोति दुर्लभम्॥ १६०॥ •

५. महाकालोपासकमुद्दिश्य : : श्रावस्त्यां जेतवने

आत्मनैव कृतं पापमात्मजं ह्यात्मसम्भवम्।
अभिमथ्नाति दुर्बुद्धिं, वज्रमश्ममणिं यथा॥ १६१॥ •

६. देवदत्तमुद्दिश्य : : राजगृहे वेणुवने

यस्यात्यन्तं हि दौःशील्यं मालुवाततशालवत्।
करोति स तथात्मानम्, द्विट् यथैनं हि वाञ्छति॥ १६२॥ •

७. सङ्घभेदक्रियाप्रसङ्गे : : राजगृहे वेणुवने

सुकराणि ह्यसाधूनि, आत्मनश्चाहितानि वै।
यद्वै हितं च साधु च, तद्वै परमदुष्करम्॥ १६३॥ •

८. कालस्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

शासनमर्हतां यद्वै, आर्याणां धर्मजीविनाम्।
प्रतिक्रोशति दुर्मेधाः, दृष्टिं निःश्रित्य पापिकाम्॥
फलानि काष्ठकस्येव, आत्मघाताय वर्धते॥ १६४॥ •

९. चूड़कालमुपासकमधिकृत्य : : श्रावस्त्यां जेतवने

आत्मना हि कृतं पापमात्मना संक्लिश्यति।
आत्मना चाकृतं पापमात्मनैव विशुध्यति।
शुद्धिरशुद्धिः प्रत्यात्ममन्यो नान्यं विशोधयेत्॥ १६५॥ •

१०. आत्मार्थस्थविरमधिकृत्य : : श्रावस्त्यां जेतवने

आत्मनोऽर्थं परार्थेन बहुनापि न हापयेत्।
आत्मनोऽर्थमभिज्ञाय, सदर्थप्रसृतो भवेत्॥ १६६॥ •

आत्मवर्गो द्वादशः सम्पन्नः॥



## १३. लोकवर्गस्त्रयोदशः

१. अन्यतरं युवानं भिक्षुमुद्दिश्य : : श्रावस्त्यां जेतवने

हीनं धर्मं न सेवेत, प्रमादेन न संवसेत्।
मिथ्यादृष्टिं न सेवेत, न स्याल्लोकस्य वर्धनः॥ १६७॥ •

२. पितरं (शुद्धोदनम्) अभिलक्ष्य : : न्यग्रोधारामे कपिलवस्तुनगरे

उत्तिष्ठेन्न प्रमाद्येत, धर्मं सुचरितं चरेत्।
धर्मचारी सुखं शेते, अस्मिन् लोके परत्र च॥ १६८॥
धर्मं चरेत् सुचरितं, न नं दुश्चरितं चरेत्।
धर्मचारी सुखं शेते, अस्मिन् लोके परत्र च॥ १६९॥ •

३. पञ्चशतविपश्यकभिक्षूनधिकृत्य : : श्रावस्त्यां जेतवने

यथा बुद्बुदकं पश्येद्, यथा पश्येन्मरीचिकाम्।
एवं लोकं नु पश्यन्तं, मृत्युराजो न पश्यति॥ १७०॥ •

४. अभयराजकुमारमभिलक्ष्य : : राजगृहे वेणुवने

एत, पश्यतेमं लोकं, चित्रं राजरथोपमम्।
यत्र बाला विषीदन्ति, नास्ति सङ्गो विजानताम्॥ १७१॥ •

५. सम्मार्जनिस्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

यश्च पूर्वं प्रमाद्यापि, पश्चात् स न प्रमाद्यति।
प्रभासयति लोकं वै, अभ्रमुक्तो यथा शशी॥ १७२॥ •

६. अङ्गुलिमालस्थविरमभिलक्ष्य : : श्रावस्त्या जेतवने

यस्य पापं कृतं कर्म, कुशलेन पिधीयते।
प्रभासयति लोकं वै, अभ्रान्मुक्तो यथा शशी॥ १७३॥ •

७. तन्तुवायपुत्रीमुद्दिश्य : : अग्गालवचैत्ये

चक्षुर्विहीनो लोकोऽयं, तनुकोऽत्र विपश्यति।
पक्षी यथा जालमुक्तः, अल्पः स्वर्गं गमिष्यति॥ १७४॥ •

८. त्रिंशद् भिक्षूनुद्दिश्य : : श्रावस्त्यां जेतवने

हंसाः सूर्यपथे यन्ति, आकाशे यन्ति ऋद्धिकाः।
धीरा लोकाद्धि नीयन्ते जित्वा मारं ससेनकम्॥ १७५॥ •

९. चिञ्चमाणविकामुद्दिश्य : : श्रावस्त्यां जेतवने

धर्ममेकमतीतस्य, प्राणिनोऽसत्यभाषिणः।
वितृष्णपरलोकस्य, नास्ति पापमकृत्यकम्॥ १७६॥ •

१०. असदृशदानप्रशंसा : : श्रावस्त्यां जेतवने

स्वर्गं न गच्छन्ति कदापि लोभिनो, दानं प्रशस्तं न कदापि मूर्खैः।
धीरश्च दानं ह्यनुमोदमानः, सुखी भवत्यत्र परत्र लोके॥ १७७॥•

११. कालमनाथपिण्डदपुत्रमभिलक्ष्य : : श्रावस्त्यां जेतवने

पृथिव्याश्चैकराज्याद्वै, स्वर्गस्य गमनादथ।
श्रेयसी स्त्रोतआपत्तिः, सर्वलोकाधिपत्यतः॥ १७८॥ •

लोकवर्गस्त्रयोदशः सम्पन्नः॥



## १४. बुद्धवर्गश्चतुर्दशः

१. मारपुत्रीमुद्दिश्य : : बोधिमण्डे

यस्य जितं नावजीयते, जितमस्य न याति कश्चिल्लोके।
तं बुद्धमनन्तगोचरम्, अपदं केन पदेन नेष्यथ!॥ १७९॥
यस्य जालिनी विषात्मिका, तृष्णा नास्ति क्वचिन्नेतुम्।
तं बुद्धमनन्तगोचरम्, अपदं केन पदेन नेष्यथ!॥ १८०॥

२. बहून् देवान् मनुष्याँश्चाभिलक्ष्य : : साङ्काश्यनगरद्वारे

ये ध्यानप्रसृता धीराः, नैष्कर्म्योपशमे रताः।
देवास्तेभ्यः स्पृहयन्ति बुद्धेभ्यः स्मरणशीलेभ्यः॥ १८१॥

३. एरकपत्रनागराजमुद्दिश्य : : वाराणस्याम्

कृच्छ्रा मनुष्यताप्राप्तिः, कृच्छ्रं मानवजीवनम्।
कृच्छ्रं सद्धर्मश्रवणं, कृच्छ्रा बुद्धस्थितिर्भृशम्॥ १८२॥

४. आनन्दस्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

सर्वपापस्याकरणं कुशलस्योपसम्पदा।
स्वचित्तपर्यवदानम्, एतद् बुद्धानुशासनम्॥ १८३॥
क्षान्तिः परमं तपस्तितिक्षा, निर्वाणं परमं वदन्ति बुद्धाः।
नहि प्रव्रजितः परोपघाती, श्रमणो भवति परं विहेठमानः॥ १८४॥
अनपवादोऽनपघातः, प्रातिमोक्षे च संवरः।
मात्राज्ञता च भक्ते वै, प्रान्ते च शयनासनम्।
आयोगश्चाधिचित्तं वै, एतद् बुद्धानुशासनम्॥ १८५॥

५. कञ्चिद् अभिरतभिक्षुमुद्दिश्य : : जेतवने श्रावस्त्याम्

न कार्षापणवर्षेण तृप्तिः कामेषु विद्यते।
'अल्पस्वादयुतान् दुःखान् कामान् विज्ञाय पण्डितः॥ १८६॥
अपि दिव्येषु कामेषु स रतिं नाधिगच्छति।
तृष्णाक्षयरतश्चासौ सम्यक्सम्बुद्धश्रावकः॥ १८७॥

६. अग्निदत्तब्राह्मणमुद्दिश्य : : श्रावस्त्यां जेतवने

बहु वै शरणं यान्ति, पर्वताँश्च वनानि च।
आरामवृक्षचैत्यानि, मनुष्या भयतर्जिताः॥ १८८॥

नैतत् खलु शरणं क्षेमं, नैतच्छरणमुत्तमम्।
नैतत् शरणमागत्य, सर्वदुःखात् प्रमुच्यते॥ १८९॥
यश्च बुद्धं च धर्मं च, सङ्घं च शरणं गतः।
चत्वारि आर्यसत्यानि, पश्यति सम्यक्प्रज्ञया॥ १९०॥
दुःखं दुःखसमुत्पादं, दुःखस्य समतिक्रमम्।
आर्यं चाष्टाङ्गिकं मार्गं दुःखोपशमगामिनम्॥ १९१॥
एतत् खलु शरणं क्षेमम्, एतच्छरणमुत्तमम्।
एतच्छरणमागत्य सर्वदुःखात् प्रमुच्यते॥ १९२॥ •

७. आनन्दस्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

दुर्लभः पुरुषः श्रेष्ठो न स सर्वत्र जायते।
यत्र स जायते धीरस्तत् कुलं सुखमेधते॥ १९३॥ •

८. सम्बहुलभिक्षूनधिकृत्य : : श्रावस्त्यां जेतवने

बुद्धोत्पादः सुखः प्रोक्तः, सुखा सद्धर्मदेशना।
सुखा सङ्घस्य सामग्री, समग्राणां तपः सुखम्॥ १९४॥ •

९. काश्यपदशबलसौवर्णचैत्यमारभ्य : : चारिकायाम्

पूज्यान् पूजयतो बुद्धान्, यदि वा श्रावकानथ।
प्रपञ्चसमतिक्रान्तान्, तीर्णशोकपरिद्रवान्॥ १९५॥
ताँस्तादृशः पूजयतो निर्वृतानकुतोभयान्।
न शक्यं पुण्यं सङ्ख्यातुमियन्मात्रं तु केनचित्॥ १९६॥ •

बुद्धवर्गश्चतुर्दशः सम्पन्नः॥

## १५. सुखवर्गः पञ्चदशः

१. ज्ञातिकानां कलहोपशान्त्यर्थम् : : शाक्यदेशे

सुसुखं बत जीवामो, यथा वैरिष्ववैरिणः।
वैरिष्वपि मनुष्येषु, विहरामो ह्यवैरिणः॥ १९७॥
सुसुखं बत जीवामः, आतरेषु त्वनातुराः।
आतुरेषु मनुष्येषु, विहरामो ह्यनातुराः॥ १९८॥
सुसुखं बत जीवामः, उत्सुकेषु त्वनुत्सुकाः।
उत्सुकेषु मनुष्येषु, विहरामो ह्यनुत्सुकाः॥ १९९॥ •

२. मारं पापिनमारभ्य : : पञ्चशालायां ब्राह्मणग्रामे

सुसुखं बत जीवामो, येषां नो नास्ति किञ्चन।
प्रीतिभक्षा भविष्यामः, देवा आभास्वरा यथा॥ २००॥ •

३. कोशलराजस्यपराजयप्रसङ्गे : : श्रावस्त्यां जेतवने

जयो वैरं प्रसूतेऽत्र, दुःखं शेते पराजितः।
उपशान्तः सुखं शेते, हित्वा जयपराजयौ॥ २०१॥ •

४. अन्यतरां कुलदारिकामुद्दिश्य : : श्रावस्त्यां जेतवने

अग्नी रागसमो नान्यः, नास्ति द्वेषसमः कलिः।
न स्कन्ध इव दुःखानि, नास्ति शान्तिपरं सुखम्॥ २०२॥ •

५. कञ्चिदेकमुपासकमारभ्य : : आळव्याम्

जिघत्सा परमो रोगः, संस्कारः परमं दुःखम्।
एतज्ज्ञात्वा यथाभूतं निर्वाणं परमं सुखम्॥ २०३॥ •

६. कौशलराजानं प्रसेनजितमुद्दिश्य : : श्रावस्त्यां जेतवने

आरोग्यपरमा लाभाः, सन्तुष्टिः परमं धनम्।
विश्वासः परमो ज्ञातिः, निर्वाणं परमं सुखम्॥ २०४॥ •

७. तिष्यस्थविरमारभ्य : : वैशालिनगरे

प्रविवेकरसं पीत्वा, रसं चोपशमस्य वै।
निद्दरो भवति निष्पापो, धर्मप्रीतिरसं पिबन्॥ २०५॥ •

८. देवराजशक्रमारभ्य : : वेणुवग्रामे

साधु दर्शनमार्याणाम्, सन्निवासः सदा सुखम्।
अदर्शनेन बालानां नित्यमेव सुखी भवेत्॥ २०६॥
बालसङ्गतचारी हि, दीर्घमध्वानं शोचति।
दुःखो बालेन संवासः, अमित्रेणेव सर्वदा।
धीरश्च सुखसंवासः, यथा ज्ञातिसमागमः॥ २०७॥
धीरं च प्राज्ञं च बहुश्रुतं च, धौरेयशीलं व्रतवन्तमार्यम्।
तं तादृशं सत्पुरुषं सुबुद्धिं, भजेत नक्षत्रपथं यथा शशी॥ २०८॥ •

सुखवर्गः पञ्चदशः सम्पन्नः॥



## १६. प्रियवर्गः षोडशः

१. प्रव्रजितत्रयमारभ्य : : श्रावस्त्यां जेतवने

युञ्जन्नयोग आत्मानम्, तथा योगे न्वयोजयन्।
अर्थं हित्वा प्रियग्राही, ईर्ष्येदात्मानुयोगिनम्॥ २०९॥
न प्रियैः सङ्गतिं कुर्यात्, अप्रियैश्च कदाचन।
प्रियस्य दर्शनं दुःखमप्रियाणां च दर्शनम्॥ २१०॥
तस्मात् प्रियं न कुर्याद्धि, प्रियापायो हि पापकः।
तेषां न जायते ग्रन्थिः, नास्ति येषां प्रियाप्रियम्॥ २११॥ •

२. अन्यतरं कञ्चित् कौटुम्बिकमुद्दिश्य : : श्रावस्त्यां जेतवने

प्रियतो जायते शोकः, प्रियतो जायते भयम्।
प्रियतो विप्रमुक्तस्य, नास्ति शोकः कुतो भयम्!॥ २१२॥ •

३. विशाखामुपासिकामुद्दिश्य : : श्रावस्त्यां जेतवने

प्रेमतो जायते शोकः, प्रेमतो जायते भयम्।
प्रेमतो विप्रमुक्तस्य, नास्ति शोकः कुतो भयम्!॥ २१३॥ •

४. लिच्छविकुमारानाधृत्य : : कूटागारशालायाम् (वैशालीनगरे)

रत्या हि जायते शोकः, रत्या वै जायते भयम्।
रत्या हि विप्रमुक्तस्य, नास्ति शोकः कुतो भयम्!॥ २१४॥ •

५. अस्त्रीगन्धकुमारमभिलक्ष्य : : श्रावस्त्यां जेतवने

कामतो जायते शोकः, कामतो जायते भयम्।
कामतो विप्रमुक्तस्य, नास्ति शोकः कुतो भयम्!॥ २१५॥ •

६. अन्यतरं ब्राह्मणमुद्दिश्य : : श्रावस्त्यां जेतवने

तृष्णाया जायते शोकः, तृष्णाया जायते भयम्।
तृष्णाया विप्रमुक्तस्य, नास्ति शोकः कुतो भयम्!॥ २१६॥ •

७. पञ्चशतदारकानभिलक्ष्य : : राजगृहे वेणुवने

शीलदर्शनसम्पन्नं, धर्मस्थं सत्यवादिनम्।
आत्मनः कर्म कुर्वन्तं, तं जनः कुरुते प्रियम्॥ २१७। •

८. किञ्चिद नागामिनं स्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

अनाख्यातश्छन्दजाते, मनसा च स्फुटो भवेत्।
अबद्धचित्तः कामेषूर्ध्वस्त्रोता अभिधीयते ॥ २१८ ॥ •

९. नन्दियमारभ्य : : ऋषिपतने मृगदावे

जनं प्रवासिनं कञ्चिद् दूरतः स्वस्थमागतम्।
सुहृदो ज्ञातिमित्राणि, अभिनन्दन्ति चागतम् ॥ २१९ ॥
तथैव कृतपुण्यं तम्, अस्माल्लोकात् परं गतम्।
पुण्यानि प्रतिगृह्णन्ति, प्रियं ज्ञातिमिवागतम् ॥ २२० ॥ •

प्रियवर्गः षोडशः सम्पन्नः ॥

## १७. क्रोधवर्गः सप्तदशः

१. क्षत्रियकन्यां रोहिणीमभिलक्ष्य : : न्यग्रोधारामे (कपिलवस्तुनगर्याम्)

क्रोधं जहीत, प्रजहीत मानं, संयोजनं सर्वमतिक्रमध्वम्।
असज्यमानं खलु नामरूपयोरकिञ्चनं नानुपतन्ति तापाः ॥ २२१ ॥ •

२. अन्यतरं भिक्षुमुद्दिश्य : : अग्गाळवचैत्ये

यो वै उत्पतितं क्रोधं, रथं भ्रान्तं च धारयेत्।
तमहं सारथिं वच्मि, रश्मिग्राहोऽपरो जनः ॥ २२२ ॥ •

३. उत्तरामुपासिकामभिलक्ष्य : : राजगृहे वेणुवने

अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत्।
जयेत् कदर्यं दानेन, सत्येनालीकवादिनम् ॥ २२३ ॥ •

४. महामौद्गल्यायनस्थविरमभिलक्ष्य : : जेतवने श्रावस्त्याम्

सत्यं भणेन्न क्रुध्येद्धै, दद्यादल्पं नु याचितम्।
प्राप्नोति देवतावासं स्थानैरेभिस्त्रिभिर्नरः ॥ २२४ ॥ •

५. भिक्षुभिः पृष्टं प्रश्नमारभ्य : : अञ्जनवने (साकेते)

अहिंसका ये मुनयो, नित्यं कायेन संवृताः।
ते गच्छन्त्यच्युतं स्थानं यत्र गत्वा न चिन्त्यते ॥ २२५ ॥ •

६. पूर्णां दासीमुद्दिश्य : : राजगृहे गृध्रकूटे

सदैव जाग्रतां शिक्षाकामानां च दिवानिशम्।
निर्वाणमधिमुक्तानामस्तं गच्छन्ति आश्रवाः ॥ २२६ ॥ •

७. अतुलमुपासकमारभ्य : : श्रावस्त्यां जेतवने

पौराणमेतदतुल! नैतदद्यतनमिव।
निन्दन्ति तूष्णीमासीनं, निन्दन्ति बहुभाणिनम्॥
निन्दन्ति मितवक्तारं, नास्ति लोके ह्यनिन्दितः॥ २२७॥
न चाभून्न भविष्यति, नेदानीमस्ति कश्चन।
एकान्तं पुरुषो निन्द्यः, एकान्तं वा प्रशंसितः॥ २२८॥
यं चेद् विज्ञाः प्रशंसन्ति, अनुविच्य दिनं दिनम्।
अच्छिन्नवृत्तिं सुधियं, प्रज्ञाशीलसमाहितम्॥ २२९॥
निष्कं जम्बूनदस्येव, कस्तं निन्दितुमर्हति!
देवा अपि प्रशंसन्ति, ब्रह्मणापि प्रशंसितः॥ २३०॥ •

८. षड्वर्गीयान् भिक्षूनधिकृत्य : : राजगृहे वेणुवने

कायप्रकोपं रक्षेद्वै, कायेन संवृतो भवेत्।
कायदुश्चरितं हित्वा, कायेन (सु) चरितं चरेत्॥ २३१॥
वाक्प्रकोपं च रक्षेद्वै, वचसा संवृतो भवेत्।
वचोदुश्चरितं हित्वा, वाचा सुचरितं चरेत्॥ २३२॥
मनःप्रकोपं रक्षेद्वै, मनसा संवृतो भवेत्।
मनोदुश्चरितं हित्वा, मनसा (सु) चरितं चरेत्॥ २३३॥
कायेन संवृता धीराः, अथ वाचा सुसंवृताः।
मनसा संवृता धीराः, ते वै सुपरिसंवृताः॥ २३४॥ •

क्रोधवर्गः सप्तदशः सम्पन्नः॥

# १८. मलवर्गोऽष्टादशः

१. गोघातकपुत्रमभिलक्ष्य : : श्रावस्त्यां जेतवने

पाण्डुपलाशवदिदानीमसि, यमपुरुषा अपि त्वामुपस्थिताः।
उद्योगमुखे च तिष्ठसि, पाथेयमपि ते न विद्यते॥ २३५॥
स द्वीपमात्मनः कुरु, क्षिप्रं व्यायच्छ, पण्डितो भव।
निर्धूतमलो निरञ्जनो, दिव्यां प्राप्स्यस्यार्यजनस्य भूमिम्॥ २३६॥
अपनीतवयाश्च साम्प्रतं, संयातोऽसि यमस्य सन्तिकम्।
वासोऽपि च ते नु नास्ति मध्ये, पाथेयमपि ते न विद्यते॥ २३७॥

स कुरु द्वीपमात्मनः, क्षिप्रं व्यायच्छ, पण्डितो भव।
निर्धूतमलो निरञ्जनो, न पुनर्जातिजरे उपैष्यसि॥ २३८॥

२. अन्यतरं ब्राह्मणमुद्दिश्य : : श्रावस्त्यां जेतवने

आनुपूर्व्येण मेधावी, स्तोकं स्तोकं क्षणे क्षणे।
कर्मारो रजतस्येव, निर्धमेन्मलमात्मनः॥ २३९॥

३. तिष्यस्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

अयस इव मलं समुत्थितं, तत उत्थाय तदेव खादति।
एवमतिधावनचारिणं स्वानि कर्माणि नयन्ति दुर्गतिम्॥ २४०॥

४. लाडुदायिस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

अस्वाध्यायमला मन्त्राः, अनुत्थानमलं गृहम्।
मलं वर्णस्य कौसीद्यं प्रमादो रक्षतो मलम्॥ २४१॥

५. अन्यतरं कुलपुत्तमुद्दिश्य : : राजगृहे वेणुवने

स्त्रिया मलं दुश्चरितं, मात्सर्यं ददतो मलम्।
मलं वै पापका धर्माः, अस्मिन् लोके परत्र च॥ २४२॥
ततो मलान्मलतरम्, अविद्या परमं मलम्।
प्रहायैतन्मलं यूयं, निर्मला भवथ भिक्षवः॥ २४३॥

६. क्षुद्रसारिभिक्षुमुद्दिश्य : : श्रावस्त्यां जेतवने

सुजीवमह्रीकेण, काकशूरेण ध्वंसिना।
प्रस्कन्दिना प्रगल्भेन, संक्लिष्टेन सुजीवितम्॥ २४३॥
ह्रीमता च नु दुर्जीवं, नित्यं शुचिगवेषिणा।
अलीनेनाप्रगल्भेन, शुद्धाजीवेन पश्यता॥ २४३॥

७. पञ्चशतमुपासकानभिसमीक्ष्य : : श्रावस्त्यां जेतवने

यः प्राणमतिपातयति, मृषावादं च भाषते।
लोके चादत्तमादत्ते, परदारांश्च गच्छति॥ २४६॥
सुरामैरेयपानं च, यो युनक्ति नरः सदा।
इहैवमेष लोके वै, मूलं खनति चात्मनः॥ २४६॥
एवं भोः पुरुष! जानीहि, पापधर्मा असंयताः।
मा त्वां लोभो न्वधर्मश्च चिरं दुःखाय रन्धतु॥ २४८॥

८. तिष्यनामकं दहरमुद्दिश्य : : श्रावस्त्यां जेतवने

ददाति वै यथाश्रद्धं, यथाप्रीति च यो जनः।
यस्तत्र मूको भवति, परेषां पानभोजने।
दिवा वा यदि वा रात्रौ समाधिं नाधिगच्छति॥ २४९॥
यस्य चैतत् समुच्छिन्नं, मूलघात्यं समुद्धतम्।
दिवा वा यदि वा रात्रौ समाधिं सोऽधिगच्छति॥ २४९॥ •

९. पञ्चोपासकानुद्दिश्य : : श्रावस्त्यां जेतवने

नास्ति रागसमो वह्निः, नास्ति द्वेषसमो ग्रहः।
नास्ति मोहसमं जालं, नास्ति तृष्णासमा सरित्॥ २४९॥ •

१०. मेण्डकश्रेष्ठिनमालक्ष्य : : जातिवने (भद्रीयनगरे)

सुदर्शं वद्यमन्येषाम्, दुर्दर्शं पुनरात्मनः।
परेषां स हि वद्यान्य, अवपुनाति यथा बुसम्।
छादयत्यात्मनो भूयः कलिमिव कितवाच्छठः॥ २४९॥ •

११. उद्ध्यानसंज्ञिनं स्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

उद्ध्यानसंज्ञिनो नित्यं परवद्यं प्रपश्यतः।
आसवास्तस्य वर्धन्ते, आरात् स आसवक्षयात्॥ २५३॥ •

१२. सुभद्रं परिव्राजकमुद्दिश्य : : कुशीनगरे

आकाशे च पदं नास्ति, श्रमणो नास्ति बाह्यतः।
प्रजाः प्रपञ्चाभिरताः, निष्प्रपञ्चास्तथागताः॥ २५३॥
आकाशे च पदं नास्ति, श्रमणो नास्ति बाह्यतः।
संस्काराः शाश्वता नैव, बुद्धानामस्ति नेङ्गितम्॥ २५५॥ •

मलवर्गोऽष्टादशः सम्पन्नः॥



## १९. धर्मस्थवर्ग एकोनविंशः

१. विनिश्चयनामकं महामात्यमधिकृत्य : : श्रावस्त्यां जेतवने

**तेन नास्ति स धर्मस्थो, येनार्थं साहसान्नयेत्।**
**अर्थानर्थावुभौ यश्च, निश्चिनुयात् स पण्डितः॥ २५६॥**
**असाहसेन धर्मेण, समेन नयते परान्।**
**धर्मस्य गुप्तो मेधावी, धर्मस्थ इति प्रोच्यते॥ २५७॥** •

२. षड्वर्गीयान् भिक्षूनधिकृत्य : : श्रावस्त्यां जेतवने

**पण्डितो नहि तेनास्ति, यावता बहु भाषते।**
**क्षेमी ह्यवैरी ह्यभयः, पण्डित इति कथ्यते॥ २५८॥** •

३. एकोदानस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

**न तावता धर्मधरो, यावता बहु भाषते।**
**यश्चाल्पमपि श्रुत्वैव, धर्मं कायेन पश्यति।**
**स वै धर्मधरः प्रोक्तः, यो धर्मान्न प्रमाद्यति॥ २५८॥** •

४. लकुण्टकभद्रियस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

**स्थविरो नहि तेनास्ति, येनास्य पलितं शिरः।**
**परिपक्कं वयस्तस्य, 'मोघजीर्णः' स उच्यते॥ २६०॥**
**यस्मिन् सत्यं च धर्मश्च, अहिंसा संयमो दमः।**
**स वै वान्तमलो धीरः, स्थविर इति कथ्यते॥ २६१॥** •

५. सम्बहुलभिक्षूनुद्दिश्य : : श्रावस्त्यां जेतवने

**न वाक्करणमात्रेण, वर्णाधिकतयाऽथ वा।**
**साधुरूपो नरो भवति, ईर्ष्यकी मत्सरी शठः॥ २६२॥**
**यस्य चैतत् समुच्छिन्नं, मूलघात्यं समूहतम्।**
**स वान्तदोषो मेधावी, साधुरूपः स कथ्यते॥ २६३॥** •

६. हत्थकनामानं कश्चिद् वादक्षिप्तमारभ्यः : श्रावस्त्यां जेतवने

**मौण्ड्येन श्रमणो नैव, अव्रतश्च मृषा भणन्।**
**इच्छालोभसमापन्नः, श्रमणः किं भविष्यति!॥ २६४॥**
**यः शमयति पापानि, अणुस्थूलानि सर्वशः।**
**शमितत्वाद्धि पापानां, श्रमण इति कथ्यते॥ २६५॥** •

७. अञ्ञतरं ब्राह्मणमुद्दिश्य : : श्रावस्त्यां जेतवने

न तेन भिक्षुर्भवति, यावता भिक्षते परान्।
विश्वं धर्मं समादाय भिक्षुः स्यान्न तावता॥ २६६॥
वाहयित्वा पुण्यपापं, भवति ब्रह्मचर्यवान्।
लोके चरति सङ्ख्यातः, स वै भिक्षुरिहोच्यते॥ २६७॥ •

८. तीर्थिकानुद्दिश्य : : श्रावस्त्यां जेतवने

मौनेन तु मुनिर्नैव, सोऽविद्वान् मूढसंज्ञकः।
तुलावद् यश्च प्रगृह्य वरमादाय पण्डितः॥ २६८॥
परिवर्जयति पापानि, स मुनिस्तेन स मुनिः।
मनुते य उभौ लोकौ, मुनिस्तेन स कथ्यते॥ २६९॥ •

९. आर्यं वाडिशिकमभिलक्ष्य : : श्रावस्त्यां जेतवने

न च तेन स आर्यःस्यात्, येन प्राणान् हिनस्ति सः।
अहिंस्त्रः सर्वप्राणानामार्य इति स कथ्यते॥ २६९॥ •

१०. शीलादिसम्पन्नान् भिक्षूनुद्दिश्य : : श्रावस्त्यां जेतवने

न शीलव्रतमात्रेण, बाहुश्रुत्येन वा पुनः।
समाधिलाभमात्रेण, विविक्तशयनेन वा॥ २७१॥
स्पृशामि नैष्कर्म्यसुखम्, अपृथग्जनसेवितम्।
भिक्षो! विश्वासं मा पादीः, अप्राप्त्वा आश्रवक्षयम्॥ २७२॥ •



धर्मस्थवर्ग एकूनविंशः सम्पन्नः॥

## २०. मार्गवर्गो विंशः

१. पञ्चशतभिक्षूनुद्दिश्य : : श्रावस्त्यां जेतवने

मार्गेष्वष्टाङ्गिकः श्रेष्ठः, सत्येषष्वार्य चतुष्टयम्।
श्रेष्ठो विरागो धर्मेषु, द्विपदेषु चक्षुषा युतः॥ २७३॥
एष मार्गोऽस्ति, नास्त्यन्यो, दर्शनस्य विशुद्धिकृत्।
एनं हि यूयं गृह्णत, मारस्यैतत् प्रमोहनम्॥ २७४॥
एनं हि यूयं प्रतिपन्नाः, दुःखस्यान्तं करिष्यथ।
आख्यातो वै मया मार्गः, ज्ञात्वा शल्यस्य कृन्तन॥ २७५॥
युष्माभिः कार्यमातप्यमाख्यातारस्तथागताः।
प्रतिपन्नाः प्रमोक्ष्यन्ते, ध्यायिनो मारबन्धनात्॥ २७६॥ •

२. पञ्चशतभिक्षूनुद्दिश्य : : श्रावस्त्यां जेतवने

'अनित्याः सर्वसंस्काराः' यो हि बुद्ध्या प्रपश्यति।
निर्विन्दत्यथ दुःखानि, एष मार्गो विशुद्धिकृत्॥ २७७॥
'दुःखा हि सर्वसंस्काराः' यो हि बुद्ध्या प्रपश्यति।
निर्विन्दत्यथ दुःखानि, एष मार्गो विशुद्धिकृत्॥ २७८॥
'सर्वे धर्मा अनात्मानः' यो हि बुद्ध्या प्रपश्यति।
निर्विन्दत्यथ दुःखानि, एष मार्गो विशुद्धिकृत्॥ २७९॥ •

३. प्रधानकार्मिकतिष्यस्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

उत्थानकाले न करोति उत्थितिं चालस्ययुक्तोऽथ युवा बली वा।
संसन्नसङ्कल्पमनाः कुशीदः, मार्गं हि बुद्धेरलसो न विन्दति॥ २८०॥•

४. शूकरप्रेतमुद्दिश्य : : राजगृहे वेणुवने

वाचानुरक्षो मनसा सुसंवृतः, कायेन चैवाकुशलं न कुर्यात्।
विशोधयेत् कर्मपथत्रयं वै, आराधयेन्मार्गमृषिप्रवेदितम्॥ २८१॥•

५. पोटलिस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

योगाद् वै जायते भूरि, अयोगात् भूरिसंक्षयः।
एतं द्वेधापथं ज्ञात्वा, भवाय विभवाय च॥
निवेशयेत् तथात्मानं, यथा भूरि प्रवर्धते॥ २८२॥ •

६. पञ्च वृद्धभिक्षूननुरुध्य : : श्रावस्त्यां जेतवने

वनं छिन्दथ, मा वृक्षं, वनतो जायते भयम्।
छित्त्वा वनं च वनथं निर्वणा भवत भिक्षवः॥ २८३॥
यावद्धि वनथोऽच्छिन्नोऽणुमात्रं नुर्हि नारीषु।
बद्धचित्तः स तावद्वै, क्षीरप इव मातरि॥ २८४॥ •

७. सारिपुत्रस्थविरसहविहारिणमुद्दिश्य : : श्रावस्त्यां जेतवने

आत्मनः स्नेहमुच्छिन्धि, शारदं कुमुदं यथा।
सुगतप्रोक्तनिर्वाणं, गम्यः शान्तिपथो ह्ययम्॥ २८५॥ •

८. महाधनवणिजमभिप्रेत्य : : श्रावस्त्यां जेतवने

'वर्षास्विह वसिष्यामि, इह हेमन्तग्रीष्मयोः।'
इति बालश्चिन्तयति, अन्तरायं न बुध्यते॥ २८६॥ •

९. कृशां गौतमीमभिलक्ष्य : : श्रावस्त्यां जेतवने

तं पुत्रपशुसम्पृक्तं व्यासक्तमनसं नरम्।
गच्छति मृत्युरादाय सुप्तं ग्रामं महौघवत्॥ २८७॥ •

१०. पटाचारां श्राविकामभिलक्ष्य : : श्रावस्त्यां जेतवने

न सन्ति पुत्रास्त्राणाय, न पिता नापि बान्धवाः।
अन्तकेनाधिपन्नस्य, त्राणता नास्ति ज्ञातिषु॥ २८८॥
एतमर्थवशं ज्ञात्वा पण्डितः शीलसंवृतः।
निर्वाणगमनं मार्गं क्षिप्रमेव विशोधयेत्॥ २८९॥ •

मार्गवर्गो विंशः सम्पन्नः॥



## २१. प्रकीर्णकवर्ग एकविंशः

१. आत्मनः पूर्वकर्मविषयमधिकृत्य : : राजगृहे वेणुवने

मात्रासुखपरित्यागात् पश्येच्चेद् विपुलं सुखम्।
त्यजेन्मात्रासुखं धीरः सम्पश्यन् विपुलं सुखम्॥ २९०॥ •

२. काञ्चित् कुक्कुटाण्डखादिकामभिलक्ष्य : : श्रावस्त्यां जेतवने

परदुःखोपधानेन, आत्मनः सुखमिच्छति।
वैरसंसर्गसंसक्तो वैरान्न परिमुच्यते॥ २९१॥ •

३. भद्रीयभिक्षुमधिकृत्य : : भद्दियनगरे जातिवने

यद्यत् कृत्यमपविद्धम्, भूयोऽकृत्यं करोति यः।
उन्मलानां प्रमत्तानां, तेषां वर्धन्त आश्रवाः॥ २९१॥
येषां च सुसमारब्धा, नित्यं कायगता स्मृतिः।
अकृत्यं ते न सेवन्ते, कृत्ये सातत्यकारिणः॥
सतां च सम्प्रजानानामस्तं गच्छन्ति आस्त्रवाः॥ २९३॥ •

४. लकुण्टकभद्रियस्थविरमभिलक्ष्य : : श्रावस्त्यां जेतवने

मातरं पितरं हत्वा, राजानौ द्वौ च क्षत्रियौ।
राष्ट्रं सानुचरं हत्वा, अनघो याति ब्राह्मणः॥ २९४॥
मातरं पितरं हत्वा, राजानौ द्वौ च श्रोत्रियौ।
व्याघ्रं च पञ्चमं हत्वा, अनघो याति ब्राह्मणः॥ २९५॥ •

५. दारुशाकटिकपुत्रमभिलक्ष्य : : श्रावस्त्यां जेतवने

सुप्रबुद्धं प्रबुध्यन्ते, गौतमश्रावकाः सदा।
येषां दिवा च रात्रौ च, नित्यं बुद्धगता स्मृतिः ॥ २९६ ॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा।
येषां दिवा च रात्रौ च, नित्यं धर्मगता स्मृतिः ॥ २९७ ॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा।
येषां दिवा च रात्रौ च, नित्यं सङ्घगता स्मृतिः ॥ २९८ ॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा।
येषां दिवा च रात्रौ च, नित्यं कायगता स्मृतिः ॥ २९९ ॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा।
येषां दिवा च रात्रौ च, अहिंसायां रतं मनः ॥ ३०० ॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा।
येषां दिवा च रात्रौ च, भावनायां रतं मनः ॥ ३०१ ॥ •

६. अन्यतरवृजिपुत्रकभिक्षुमारभ्य : : वैशालीनगरे महावने

दुष्प्रव्रजं दुरभिरमं, दुरावासं गृहं ततः।
दुःखश्चासमसंवासः, दुःखानुपतिताध्वगः।
अध्वगो न भवेत् तस्मान्न दुःखपतितो भवेत्॥ ३०२ ॥ •

७. चित्तगृहपतिमुद्दिश्य : : श्रावस्त्यां जेतवने

श्रद्धालुः, शीलसम्पन्नः, यशोभोगसमर्पितः।
यं यं प्रदेशं भजति, तत्र तत्रैव पूजितः ॥ ३०३ ॥ •

८. अनाथपिण्डिकस्य धीतरमुद्दिश्य : : श्रावस्त्यां जेतवने

द्योतन्ते दूरतः सन्तः, हिमवान् पर्वतो यथा।
इहासन्तो न दृश्यन्ते, रात्रौ क्षिप्ता यथा शराः ॥ ३०४ ॥ •

९. एकविहारिकं स्थविरमुद्दिश्य : : श्रावस्त्यां जेतवने

एकासनम् एकशय्यां, चरन्नेको न्वतन्द्रितः।
दमयन्नेक आत्मानं, वनान्ते स रतो भवेत्॥ ३०५ ॥ •

प्रकीर्णकवर्ग एकविंशः सम्पन्नः ॥



## २२. निरयवर्गो द्वाविंशः

१. सुन्दरीं परिव्राजिकामुद्दिश्य : : श्रावस्त्यां जेतवने

अभूतवादी निरयं उपैति, यो वापि कृत्वा न करोमि चाह।
उभावपि प्रेत्य समौ भविष्यतः, निहीनकृत्यौ मनुजौ परत्र॥ ३०६॥ •

२. दुश्चरितफलपीडितसत्त्वमुद्दिश्य : : राजगृहे वेणुवने

काषायकण्ठा बहवः, पापधर्मा असंयताः।
पापाः पापैः कर्मभिस्ते निरयं यान्ति निश्चितम्॥ ३०७॥ •

३. वल्गुमुदा–तीरवासिनं भिक्षुमुद्दिश्य : : वैशाल्यां महावने

भुक्तं त्वयोगुलं श्रेयः, तप्तमग्निशिखोपमम्।
यच्चेद् भुञ्जीत दुःशीलो राष्ट्रपिण्डमसंयतः॥ ३०८॥ •

४. अनाथपिण्डकभागिनेयं क्षेमकं प्रति : : श्रावस्त्यां जेतवने

स्थानानि चत्वारि नरः प्रमत्तः, प्राप्नोत्यवश्यं परदारसेवी।
अपुण्यलाभं न निकामशय्यां, निन्दां तृतीयां निरयं चतुर्थम्॥ ३०९॥
अपुण्यलाभश्च गतिश्च पापिका, रतिश्च भीतां प्रति तस्य स्तोका।
राजा च दण्डं प्रददात्यनल्पं तस्मान्न सेवेत नरः परस्त्रीः॥ ३१०॥ •

५. अन्यतरं दुर्वचसं भिक्षुमुद्दिश्य : : श्रावस्त्यां जेतवने

कुशो यथा दुर्गृहीतो, हस्तमेवानुकृन्तति।
श्रामण्यं दुष्परामृष्टं, निरयायोपकर्षति॥ ३११॥
यत् किञ्चित् शिथिलं कर्म, संक्लिष्टं चैव यद् व्रतम्।
सङ्कृच्छ्रं ब्रह्मचर्यं वै, न तदस्ति महाफलम्॥ ३१२॥
कुर्याच्चेत् ननु कुर्वीत, दृढमेतत् पराक्रमेत्।
शिथिला हि परिव्रज्या, भूय आकिरते रजः॥ ३१३॥ •

६. काञ्चिदीर्ष्याप्रकृतिकां स्त्रियमुद्दिश्य : : श्रावस्त्यां जेतवने

अकृतं दुष्कृतं श्रेयः, पश्चात् तपति दुष्कृतम्।
कृतं च सुकृतं श्रेयो, यत्कृत्वा नानुतप्यते॥ ३१४॥ •

७. सम्बहुलानागन्तुकान् भिक्षूनुद्दिश्य : : श्रावस्त्यां जेतवने

नगरं यथा प्रत्यन्तं, गुप्तमन्तश्च बाह्यतः।
आत्मानं गोपयेदेवं क्षणो मा वै उपातिगाः।

क्षणातीता हि शोचन्ति, निरयं ते समर्पिताः ॥ ३१५ ॥ •

८. निर्ग्रन्थान् उद्दिश्य : : श्रावस्त्यां जेतवने

अलज्ज्ये ये हि लज्जन्ते, लज्जन्ते च न लज्ज्यके।
मिथ्यादृष्टिसमादानाः, सत्त्वा गच्छन्ति दुर्गतिम्॥ ३१६ ॥
अभये भयं पश्यन्ति, भये चाभयदर्शिनः।
मिथ्यादृष्टिसमादानाः, सत्त्वा गच्छन्ति दुर्गतिम्॥ ३१७ ॥ •

९. तीर्थिकश्रावकानुद्दिश्य : : श्रावस्त्यां जेतवने

अवर्ज्ये वर्ज्यमतयो, वर्ज्ये चावर्ज्यदर्शिनः।
मिथ्यादृष्टिसमादानाः, सत्त्वा गच्छन्ति दुर्गतिम्॥ ३१८ ॥
वर्ज्यं च वर्ज्यतो ज्ञात्वा, अवर्ज्यं वै अवर्ज्यतः।
सम्यग्दृष्टिसमादानाः, गच्छन्ति सुगतिं नराः॥ ३१९ ॥ •

निरयवर्गो द्वाविंशः सम्पन्नः॥



## २३. नागवर्गस्त्रयोविंशः

१. आत्मानमारभ्य आनन्दं प्रति : : कौशाम्बीनगरे

संग्रामेऽहं यथा नागः चापवत् पतितं शरः।
अतिवाक्यं तितिक्षिष्ये, दुःशीला बहवो जनाः॥ ३२० ॥
दान्तं नयन्ति समितिं, दान्तं राजाभिरूहति।
दान्तः श्रेष्ठो मनुष्येषु, योऽतिवाक्यं तितिक्षति॥ ३२१ ॥
वरमश्वतरा दान्ताः, आजानेयाश्च सैन्धवाः।
कुञ्जराश्च महानागाः, आत्मदान्तस्ततो वरम्॥ ३२२ ॥ •

२. हस्त्याचार्यपूर्वकं भिक्षुमभिलक्ष्य : : श्रावस्त्यां जेतवने

न ह्येतैर्हि यानैर्ना, गच्छेत् क्वाप्यगतां दिशम्।
यथात्मना सुदान्तेन, दान्तो दान्तेन गच्छति॥ ३२३ ॥ •

३. कश्चित् परिजीर्णब्राह्मणमुद्दिश्य : : श्रावस्त्याम्

धनपालः कुञ्जरो नाम कटकभेदी दुर्निवारः।
बद्धः कबलं न भुंक्ते, स्मरति नागबलस्य कुञ्जरम्॥ ३२४ ॥ •

४. राजानं प्रसेनजितं कौशलमभिलक्ष्य : : श्रावस्त्यां जेतवने

मृद्धो यथा स्याद्धि महाघसश्च, निद्रायितः सम्परिवर्तशायी।
निवापपुष्टो हि यथा वराहः, पुनः पुनर्गर्भमुपैति मन्दः॥ ३२५॥•

५. सानुश्रामणेरमुद्दिश्य : : श्रावस्त्यां जेतवने

पुराऽचरच्चित्तमिदं यतस्ततः, यथेप्सितं यत्रकामं यथासुखम्।
तदद्याहं योनिशो निगृहीष्यामि गजं निगृह्णाति यथाङ्कुशेन॥ ३२६॥•

६. पावेयकहस्तिनमभिलक्ष्य : : श्रावस्त्यां जेतवने

अप्रमादेन संयुक्ताः, स्वचित्तमनुरक्षथ।
दुर्गादुद्धरतात्मानं, पङ्के सक्तो यथा गजः॥ ३२७॥ •

७. सम्बहुलभिक्षूनधिकृत्य : : पारिलेयकवने

कञ्चिल्लभेत चतुरं सहायं, सहचारिणं साधुविहारिधीरम्।
अभिभूय सर्वांश्च परिश्रयान्वै, चरेद्धि तेनात्तमनाः स धीमान्॥ ३२८॥
न चेल्लभेत चतुरं सहायं सार्धञ्चरं साधुविहारिधीरम्।
राजेव राष्ट्रं विजितं प्रहाय, एकश्चरेद्धस्तिपतिर्यथा वने॥ ३२९॥
एकस्य चरितं श्रेयो, नास्ति बाले सहायता।
एकश्चरेन्न च पापानि कुर्याद्, गजो यथा वै विचरत्यरण्ये॥ ३३०॥•

८. मारं पापिनमारभ्य : : हिमवदरण्यकुटिकायाम्

सुखाः सहायाः खलु अर्थजाते, तुष्टिः सुखा या इतरेतरेण।
पुण्यं सुखं जीवितसंक्षये वै, सर्वस्य दुःखस्य सुखं प्रहाणम्॥ ३३१॥
मातृसेवा सुखा लोके, पितृसेवा तथा सुखा।
सुखा श्रमणता लोके, ब्राह्मण्यं च तथा सुखम्॥ ३३२॥
सुखं यावज्जरं शीलं, सुखा श्रद्धा प्रतिष्ठिता।
प्रज्ञालाभः सुखः प्रोक्तः, पापस्याकरणं सुखम्॥ ३३३॥•

नागवर्गस्त्रयोविंशः सम्पन्नः॥



## २४. तृष्णावर्गश्चतुर्विंशः

१. कपिलमत्स्यमभिलक्ष्य : : श्रावस्त्यां जेतवने

मनुजस्य प्रमत्तचारिणस्तृष्णा वर्धते मालुवा लता इव।
स प्लवते इहापरत्र च, फलमिच्छन् हि यथा वने कपिः ॥ ३३४॥

यमेषा जन्मिनी सहते तृष्णा लोके विषात्मिका।
शोकास्तस्य प्रवर्धन्तेऽभिवृद्धमिव वीरणम्॥ ३३५॥

यश्चैनां सहते जन्मिनीं तृष्णां लोके दुरत्ययाम्।
शोकास्तस्य प्रपतन्ति, उदबिन्दुरिव पुष्करात्॥ ३३६॥

तद् वो वदामि भद्रं वो यावन्त इह आगताः।
मूलं खनत तृष्णायाः, उशीरार्थीव वीरणम्।
मा वो नडवत् स्रोतो मारो भाङ्क्षीः पुनः पुनः॥ ३३७॥ •

२. गूथशूकरपोतिकामुद्दिश्य : : राजगृहे वेणुवने

यथापि मूले ह्यनुपद्रवे दृढे, छिन्नोऽपि वृक्षः पुनरेव रोहति।
एवं हि तृष्णानुशये अनूहते, निर्वर्तते दुःखमिदं पुनः पुनः॥ ३३८॥

यस्य स्रोतांसि षट्त्रिंशत्, मनः प्रस्रवणानि स्युः।
वाहा वहन्ति दुर्दृष्टिं, सङ्कल्पा रागनिःसृताः॥ ३३९॥

स्रवन्ति सर्वस्रोतांसि, लता उद्भिद्य तिष्ठति।
तां च दृष्ट्वा लतां जातां मूलं छिन्दत प्रज्ञया॥ ३४०॥

स्रोतांसि स्निग्धानि च प्राणिनां स्युरथापि सौजन्ययुतानि तानि।
स्रोतःसृतास्ते च सुखैषिणः स्युस्तथैव ते जातिजरोपगा नराः॥ ३४१॥

तृष्णापुरस्कृता लोकाः परिसर्पन्ति शशा इव।
संयोजनासक्तचित्ताः दुःखं यान्ति पुनश्चिरम्॥ ३४२॥

तृष्णापुरस्कृता लोकाः परिसर्पन्ति शशा इव।
तृष्णां विनोदयेत्तस्मात् वैराग्यस्याभिलाषुकः॥ ३४३॥ •

३. एकं विभ्रान्तचित्तं भिक्षुमुद्दिश्य : : राजगृहे वेणुवने

यो निर्वनतो वनाधिमुक्तो वनमुक्तो वनमेव धावति।
तं पुद्गलमेव पश्यत, मुक्तो बन्धनमेव धावति॥ ३४४॥ •

४. बन्धनागारमधिकृत्य : : श्रावस्त्यां जेतवने

न तं दृढं बन्धनमाहुर्धीराः यदायसं दारुजबब्बजं च।
सारक्तरक्ता मणिकुण्डलेषु पुत्रेषु दारेषु च या अपेक्षा॥ ३४५॥
एतद् दृढं बन्धनमाहुर्धीराः, अवहारि यच्छिथिलं दुष्प्रमोचम्।
एतत्तु छित्त्वा नु परिव्रजन्ति, अनपेक्षिणः कामसुखं प्रहाय॥ ३४६॥ •

५. बिम्बिसारस्य क्षेमां पट्टमहिषीमभिलक्ष्य : : राजगृहे वेणुवने

ये रागरक्ता हि पतन्ति स्रोतः, स्वयंकृते मर्कटको हि जाले।
एतत्तु छित्त्वा नु व्रजन्ति धीराः, अनपेक्षिणः सर्वदुःखं प्रहाय॥ ३४७॥ •

६. उग्रसेनमुद्दिश्य : : राजगृहे वेणुवने

मुञ्च पुरा मुञ्च पश्चात्, मध्ये मुञ्च भवस्य पारग!
सर्वत्र विमुक्तमानसो, न पुनर्जातिजरामुपैष्यसि॥ ३४८॥ •

७. क्षुद्रधनुर्ग्रहपण्डितमभिलक्ष्य : : श्रावस्त्यां जेतवने

वितर्कमथितस्य प्राणिनस्तीव्ररागस्य शुभानुदर्शिनः।
भूयस्तृष्णा प्रवर्धते, एषा खलु दृढं करोति बन्धनम्॥ ३४९॥
रतो वितर्कोपशमे, ह्यशुभं भावयते सदा।
एष खलु व्यन्तीकरिष्यति, एष छेत्स्यति मारबन्धनम्॥ ३५०॥ •

८. पापिमन्तं मारमारभ्य : : श्रावस्त्यां जेतवने

निष्ठां गतो ह्यसन्त्रासी, वीततृष्णो ह्यनङ्गणः।
अच्छिनद् भवशल्यानि, अन्तिमोऽयं समुच्छ्रयः॥ ३५१॥
वीततृष्णो ह्यनादानो, निरुक्तिपदकोविदः।
अक्षराणां सन्निपातं वेत्ति पूर्वापराणि च।
स वै अन्तिमशारीरो, महाप्राज्ञः स उच्यते॥ ३५२॥ •

९. उपकमाजीवकमुद्दिश्य : : अन्तरामार्गम्

सर्वाभिभूः सर्वविच्चाहमस्मि सर्वेषु धर्मेषु अनूपलिप्तः।
सर्वञ्जहस्तृष्णाक्षये विमुक्तः स्वयं ह्यभिज्ञाय कमुद्दिशेयम्!॥ ३५३॥ •

१०. शक्रं देवराजमुद्दिश्य : : श्रावस्त्यां जेतवने

धर्मदानं सर्वदानं जिनाति, धर्मरसो सर्वरसं जिनाति।
धर्मरतिः सर्वरतिं जिनाति, तृष्णाक्षयः सर्वदुःखं जिनाति॥ ३५४॥ •

११. अपुत्रकं श्रेष्ठिनमारभ्य : : श्रावस्त्यां जेतवने

भोगाः दुर्मेधसं घ्नन्ति, न चेत् पारगवेषिणः।
हन्त्यन्यमिव चात्मानं, दुर्मेधा भोगतृष्णया॥ ३५५॥ •

१२. अङ्कुरदेवपुत्रमारभ्य : : पाण्डुकम्बलशिलायां त्रायस्त्रिंशलोके

क्षेत्राणि तृणदोषाणि, रागदोषा इयं प्रजा।
तस्माद्धि वीतरागेषु, दत्तमस्ति महाफलम्॥ ३५६॥
क्षेत्राणि तृणदोषाणि, द्वेषदोषा इयं प्रजा।
वीतद्वेषेषु तस्माद्धि, दत्तमस्ति महाफलम्॥ ३५७॥
क्षेत्राणि तृणदोषाणि, मोहदोषा इयं प्रजा।
तस्माद्धि वीतमोहेषु, दत्तमस्ति महाफलम्॥ ३५८॥
क्षेत्राणि तृणदोषाणि, इच्छादोषा इयं प्रजा।
विगतेच्छुषु तस्माद्धि, दत्तमस्ति महाफलम्॥ ३५९॥ •
क्षेत्राणि तृणदोषाणि, तृष्णादोषा इयं प्रजा।
तस्माद्धि वीतमोहेषु, दत्तमस्ति महाफलम्॥ ३५८॥

तृष्णावर्गश्चतुर्विंशः सम्पन्नः॥



## २५. भिक्षुवर्गः पञ्चविंशः

१. पञ्च भिक्षूनुद्दिश्य : : श्रावस्त्यां जेतवने

चक्षुषा संवरः साधुः, साधुः श्रोत्रेण संवरः।
घ्राणेन संवरः साधुः, संवरः साधु जिह्वया॥ ३६०॥
कायेन संवरः साधुः, साधुर्वाचा हि संवरः।
मनसा संवरः साधुः, साधुः सर्वत्र संवरः॥
सर्वत्र संवृतो भिक्षुः, सर्वदुःखात् प्रमुच्यते॥ ३६१॥ •

२. कश्चिद् हंसघातकं भिक्षुमुद्दिश्य : : श्रावस्त्यां जेतवने

संयतो हस्तपादाभ्यामथ वाचा हि चोत्तमः।
समाहितोऽध्यात्मरतः, सन्तुष्टो भिक्षुरुच्यते॥ ३६२॥ •

३. कोकालिकभिक्षुमुद्दिश्य : : श्रावस्त्यां जेतवने

मुखेन संयतो भिक्षुर्मन्त्रभाणी ह्यनुद्धतः।
दीपयत्यर्थधर्मौ च, मधुरं तस्य भाषितम्॥ ३६३॥ •

४. धर्मारामस्थविरमारभ्य : : श्रावस्त्यां जेतवने

धर्मारामो धर्मरतो, धर्मं चानुविचिन्तयन्।
धर्मं ह्यनुस्मरन् भिक्षुः, धर्मान्न परिहीयते॥ ३६४॥ •

५. कञ्चिद्विपक्षसेवकमभिलक्ष्य : : राजगृहे वेणुवने

स्वलाभं नाति मन्येत, नान्येभ्यः स्पृहयँश्चरेत्।
अन्येभ्यः स्पृहयन् भिक्षुः, समाधिं नाधिगच्छति॥ ३६५॥
अल्पलाभोऽपि चेद् भिक्षुः, स्वलाभं नाति मन्यते।
तं वै देवाः प्रशंसन्ति, शुद्धाजीवमतन्द्रितम्॥ ३६६॥ •

६. पञ्चाग्रदायकं ब्राह्मणमभिलक्ष्य : : श्रावस्त्यां जेतवने

सर्वशो नामरूपे वै, यस्य नास्ति ममायितम्।
योऽसति च न शोचति, भिक्षुः स खलु कथ्यते॥ ३६७॥ •

७. सम्बहुलभिक्षूनधिकृत्य : : श्रावस्त्यां जेतवने

मैत्रीविहारी यो भिक्षुः, प्रसन्नो बुद्धशासने।
अधिगच्छेत् पदं शान्तं संस्कारोपशमं सुखम्॥ ३६८॥
सिञ्च भिक्षो! इमां नावं, सिक्ता लाघवमेष्यति।
छित्त्वा रागं च द्वेषं च, ततो निर्वाणमेष्यसि॥ ३६९॥
पञ्च छिन्द्यात् पञ्च जह्यात्, भावयेत् पञ्च चोत्तरम्।
पञ्चसङ्गातिगो भिक्षुः, औघतीर्णो हि कथ्यते॥ ३७०॥
ध्याय भिक्षो मा प्रमद, मा ते कामगुणे भ्रमतु चित्तम्।
मा लोहगुडं गिल प्रमत्तः, मा क्रन्दीः दुःखमिति दह्यमानः॥ ३७१॥
नास्ति ध्यानमप्रज्ञस्य, प्रज्ञा नास्त्यध्यायतः।
यस्य ध्यानं च प्रज्ञा च, निर्वाणस्य स सन्तिके॥ ३७२॥
शून्यागारं प्रविष्टस्य, शान्तचित्तस्य योगिनः।
अमानुषी रतिर्भवति, धर्मं सम्यग् विपश्यतः॥ ३७३॥
यतो यतः सम्मृशति, स्कन्धानामुदयव्ययम्।

लभते प्रीतिप्रामोद्यममृतं तद् विजानताम्॥ ३७४॥
तत्रायमादिर्भवति, इह प्राज्ञस्य योगिनः।
इन्द्रियगुप्तिः सन्तुष्टिः, प्रातिमोक्षे च संवरः॥ ३७५॥
भज कल्याणमित्राणि, शुद्धाजीवानतन्द्रितान्।
प्रतिसंस्तारवृत्तः स्याः, आचारकुशलो भवेः॥
ततः प्रामोद्यबहुलो दुःखस्यान्तं करिष्यसि॥ ३७६॥ •

८. पञ्चशतभिक्षूनभिलक्ष्य : : श्रावस्त्यां जेतवने

वर्षिका इव पुष्पाणि, मृदूनि खलु मुञ्चति।
एवं रागं च द्वेषं च, विप्रमुञ्चत भिक्षवः॥ ३७७॥ •

९. शान्तकायस्थविरमालक्ष्य : : श्रावस्त्यां जेतवने

शान्तवाक् शान्तकायश्च, शान्तचित्तः समाहितः।
वान्तलोकामिषो भिक्षुः, उपशान्तो हि कथ्यते॥ ३७८॥ •

१०. नङ्गुलकुलस्थविरमालक्ष्य : : श्रावस्त्यां जेतवने

चोदयेदात्मनात्मानं, विमर्शेदात्मना स्वयम्।
स्मृतिमान् आत्मगुप्तश्च, सुखेन विहरिष्यति॥ ३७९॥
आत्मा हि आत्मनो नाथः, को हि नाथः परो भवेत्।
तस्मात् संयमयात्मानं, भद्रमश्वं यथा वणिक्॥ ३८०॥ •

११. वल्कलिस्थविरमुद्दिश्य : : राजगृहे वेणुवने

प्रामोद्यबहुलो भिक्षुः प्रसन्नो बुद्धशासने।
अधिगच्छेत् पदं शान्तं संस्कारोपशमं सुखम्॥ ३८१॥ •

१२. सुमनश्रामणेरमभिलक्ष्य : : श्रावस्त्यां पूर्वारामे

यो ह वै दहरो भिक्षुः, युनक्ति बुद्धशासने।
प्रभासयतीमं लोकम्, अभ्रान्मुक्तो यथा शशी॥ ३८२॥ •

भिक्षुवर्गः पञ्चविंशो निष्पन्नः॥



## २६. ब्राह्मणवर्गः षड्विंशः

१. प्रसादबहुलब्राह्मणमभिलक्ष्य : : श्रावस्त्यां जेतवने

छिन्धि स्त्रोतः पराक्रम्य, कामान् प्रणुद ब्राह्मण।
संस्काराणां क्षयं ज्ञात्वा, अकृतज्ञोऽसि ब्राह्मण॥ ३८३॥ •

२. सम्बहुलभिक्षूनधिकृत्य : : श्रावस्त्यां जेतवने

यदा धर्मद्वये ह्यस्मिन्, विप्रो भवति पारगः।
अथास्य सर्वे संयोगाः, अस्तं गच्छन्ति जानतः॥ ३८॥ •

३. पापिनं मारमुद्दिश्य : : श्रावस्त्यां जेतवने

यस्य पारमपारं वा, पारापारं न विद्यते।
वीतदरं विसंयुक्तं, ब्राह्मणं तं ब्रवीम्यहम्॥ ३८५॥ •

४. अन्यतरं ब्राह्मणमुद्दिश्य : : श्रावस्त्यां जेतवने

विरजं ध्यायिनमासीनं, कृतकृत्यमनाश्रवम्।
उत्तमार्थमनुप्राप्तं, ब्राह्मणं तं ब्रवीम्यहम्॥ ३८६॥ •

५. आनन्दस्थविरमभिलक्ष्य : : श्रावस्त्यां पूर्वारामे मृगारमातृप्रासादे

दिवा तपति आदित्यः, रात्रिमाभाति चन्द्रमाः।
क्षत्रियस्तपति सन्नद्धः, ध्यायी तपति ब्राह्मणः॥
अथ सर्वमहोरात्रं, बुद्धस्तपति तेजसा॥ ३८७॥ •

६. अन्यतरं ब्राह्मणमभिलक्ष्य : : श्रावस्त्यां जेतवने

बाहितपापो ब्राह्मणः, श्रमणः समचर्यया।
मलं नाशयति स्वस्य, प्रव्रजितः स उच्यते॥ ३८८॥ •

७. सारिपुत्रस्थविरमारभ्य : : श्रावस्त्यां जेतवने

नायं ब्राह्मणं प्रहरेत्, नास्मै मुञ्चेद्धि ब्राह्मणः।
धिग् ब्राह्मणस्य हन्तारं, धिक् तं यं प्रहरिष्यति॥ ३८९॥
न ब्राह्मणस्यैतदनल्पश्रेयः, यदा निषेधो मनसा प्रियेभ्यः।
यतो यतो हिंस्त्रमनो निवर्तते, ततस्ततः शाम्यति दुःखमेतत्॥ ३९०॥•

८. महाप्रजापतिगौतमीमधिकृत्य : : श्रावस्त्यां जेतवने

यस्य कायेन वाचा च, मनसा नास्ति दुष्कृतम्।
स्थानत्रयेण संवृतं, ब्राह्मणं तं ब्रवीम्यहम्॥ ३९१॥ •

